आत्मा उपलब्धास्तासां परित्यागस्तैश्च न संवसेदुदीचीं दिशं गत्वानश्नन् संहिताध्ययनमधीयानः पूतो भवतीति विज्ञायते।

अथाप्युदाहरन्ति।

शरीरपातनाच्चैव तपसाध्ययनेन च। मुच्यते पापकृत् पापाद्दानाच्चापि प्रमुच्यते॥ इति विज्ञायते।

इति वासिष्ठे धर्म्मशास्त्रे विंशोऽध्यायः॥ २०॥

---

## एकविंशोऽध्यायः।

शूद्रश्चेद् ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत् पूता भवतीति विज्ञायते। वैश्यश्चेद् ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कारयित्वा सर्पिषाभ्यज्य नग्नां गौरथमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते। राजन्यश्चेद् ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरोवापनं कारयित्वा सर्पिषाभ्यज्य नग्नां रक्तखरमारोप्य महापथमनुव्राजयेत्। एवं वैश्ये राजन्यायां शूद्रश्च राजन्यावैश्ययोर्मनसा भर्त्तुरतिचारे त्रिरात्रं यावकं चीरं भुञ्जानाधःशयाना त्रिरात्रमप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्वाजुहुयात् पूता भवतीति विज्ञायते।

इति वासिष्ठे धर्म्मशास्त्रे एकविंशोऽध्यायः॥ २१॥

---

वसिष्ठसंहिता सम्पूर्णा।